कृतास्तेन तथा परे ॥ पपौ च रुधिरं कोष्ठादन्येषां धुतकेसरः ॥१८॥
क्षणेन तद्बलं सर्वं क्षयं नीतं महात्मना ॥ तेन केसरिणा देव्या वा
हनेनातिकोपिना ॥१९॥ श्रुत्वा तमसुरं देव्या निहतं धूम्रलोचनम्
बलं च क्षयितं कृत्स्नं देवीकेसरिणा ततः ॥२०॥ चुकोप दैत्याधिपतिः
शुंभः प्रस्फुरिताधरः ॥ आज्ञापयामास च तौ चंडमुंडौ महासुरौ ॥२१॥
हे चंड हे मुंड बलैर्बहुभिः परिवारितौ ॥ तत्र गच्छत गत्वा च सा समा
नीयतां लघु ॥२२॥ केशेष्वाकृष्य बद्ध्वा वा यदि वः संशयो युधि ॥

तदाशेषायुधैः सर्वैरसुरैर्विनिहन्यताम्॥ २३॥ तस्यां हतायां दुष्टा
यां सिंहे च विनिपातिते॥ शीघ्रमागम्यतां बद्ध्वा गृहीत्वा तामथांबि
काम्॥ २४॥ इति मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये धूम्र
लोचनवधः॥ ६॥ ऋषिरुवाच॥ आज्ञप्तास्ते ततो दैत्याश्चण्डमुण्डपुरोगमाः
चतुरंगबलोपेता ययुरभ्युद्यतायुधाः॥ १॥ ददृशुस्ते ततो देवीमीष
द्धासां व्यवस्थिताम्॥ सिंहस्योपरि शैलेन्द्रशृंगे महति कांचने॥ २॥
ते दृष्ट्वा तां समादातुमुद्यमं चक्रुरुद्यताः॥ आकृष्टचापासिधरा

सोऽभ्यधावत्तामसुरो धूम्रलोचनः हुंकारैणैव तं भस्म सा चकारांबि
का ततः ॥६॥ अथ क्रुद्धम्महासैन्यमसुराणां तथांबिका ॥ ववर्ष सायकै
स्तीक्ष्णैस्तथा शक्तिपरश्वधैः ॥७॥ ततो धुतसटः कोपात्कृत्वा नादं सुभै
रवम् ॥ पपातासुरसेनायां सिंहो देव्याः स्ववाहनः ॥८॥ कांश्चित्करप्र
हारेण दैत्यानास्येन चापरान् ॥ आक्रांत्या चाधरेणान्यान् स जघानम
हासुरान् ॥९॥ केषांचित्पाटयामास नखैः कोष्ठानि केसरी ॥ तथात
लप्रहारेण शिरांसि कृतवान्पृथक् ॥१०॥ विछिन्नबाहुशिरसः ॥

स ×२

९१

नत्वपरित्राणदः कश्चिद्यदि वोत्तिष्ठतेपरः सहंतव्योमरो वापियक्षोगंध
र्वएववा॥ ऋषिरुवाच॥ तेनाज्ञप्तस्ततः शीघ्रं सदैत्योधूम्रलोचनः हृष्ट
नः षष्ट्यासहस्राणामसुराणांद्रुतंययौ॥५॥ सदृष्ट्वातांततोदेवींतुहि
नाचलसंस्थितां॥ जगादोच्चैः प्रयाहीतिमूलंशुंभनिशुंभयोः॥६॥ नचे
त्प्रीत्याद्यभवतीमद्भर्तारमुपैष्यति॥ ततोबलान्नयाम्येषकेशाकर्ष
णविह्वलां॥७॥ देव्युवाच॥ दैत्येश्वरेणप्रहितोबलवान्बलसंवृतः
बलान्नयसिमामेवंततः किंतेकरोम्यहम्॥८॥ ऋषिरुवाच॥ इत्युक्तः